


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका
सप्टेम्बर् - २०१९, रू.५/-

०४-१०-२०१९
भृगुवासरः
रात्रौ
गरुडवाहनम्

तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवः
३०-०९-२०१९ तः ०८-१०-२०१९ पर्यन्तम्




भारत राष्ट्रपतयः श्री राम्नाथ् कोविन्द् महोदयाः
२०१९ जूलै १३,१४ दिनयोः तिरुपति
श्री कपिलेश्वरस्वामिनं तथा तिरुचानूरु श्री पद्मावतीमातरं
पुनः तिरुमल श्री वराह स्वामिनं
तथा श्री वेङ्कटेश्वरस्वामिनं
सकुटुम्ब परिवार समेतः दर्शित वन्तः।
छायाचित्रानि अत्र प्रदर्श्यन्ते।

















## गीतामृतम्

सञ्जय उवाच -

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा।
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ।।

सञ्जयः एवमुक्तवान् तस्मिन् समये राजा दुर्योधनः व्यूहरचनायुक्तं पाण्डवसेनां दृष्टवान् एवञ्च द्रोणाचार्यस्य पार्श्वे गत्वा एतद्वचनम् अब्रवीत्।

(भगवद्गीता १/२)

## सङ्कीर्तनम्

नमो नारायणाय
नारायणाय सगुणब्रह्मणे
सर्व पारायणाय शोभनमूर्तये नमो ।।नमो।।

नित्याय विबुधसंस्तुत्याय
नित्याधित्याय मुनिगणप्रत्ययाय
सत्याय प्रत्यक्षाय सन्मानस
सांगत्याय जगदवनकृत्याय ते नमो ।।नमो।।

अक्रमोद्धतबाहुविक्रमातिक्रान्त
शुक्रशिष्योन्मूलनक्रमाय
शुक्रादिगीर्वाणविक्रभयभङ्ग
निर्वक्राय निहतारिचक्राय ते नमो ।।नमो।।

अक्षरायातिनिरपेक्षाय
पुण्डरीकाक्षाय श्रीवत्सलक्षणाय
अक्षीणविज्ञानदक्षयोगीन्द्र
संरक्षानुकम्पाकटाक्षाय ते नमो ।।नमो।।

करिराजवरदाय कौस्तुभाभरणाय
मुरवैरिणे जगन्मोहनाय
तरुणेन्दुकोटीरतरुणीमनस्तोत्र
परितोषचित्ताय परमायते नमो ।।नमो।।

पात्रदानोत्सवप्रथितवेङ्कटराय
धात्रीशकामितार्थप्रदाय
गोत्रभिन्मणिरुचिरगात्राय
रविचन्द्रनेत्राय शेषाद्रिनिलयाय ते नमो ।।नमो।।

(श्री अन्नमाचार्यस्य संस्कृतसङ्कीर्तनानि)



अस्यां सङ्कीर्तनायां चरणानि पञ्च सन्ति। श्रीरागे निबद्धेयम्। यतिप्रासनियमः पालितः। प्रासयतिः बहुषु स्थलेषु प्रयुक्ता। साधारणतया पदकवितासु द्विपदरूपवत् चतुर्थगणादौ यतिर्भवति। सङ्गीतशास्त्रे मात्रागणानां प्रत्येकनामानि वर्तन्ते। द्विमात्रागणः दगणः त्रिमात्रागणः तगणः चतुर्मात्रागणः चगणः पञ्चमात्रागणः पगणः षण्मात्रागणः छगणः इति।

## सम्पादकीयम्

# ब्रह्मोत्सवकीर्तिपथे बहवः महानुभावाः...

तिरुमलक्षेत्रे (गिरिषु) स्वयम्भूरूपेण स्थितस्य श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः इतर उत्सवेभ्यः विलक्षणः, विशिष्टः वैभवोपेतश्च।

उत् + सवः=उत्सवः। 'उत्' इत्युक्ते महान् इति एवञ्च 'सवः' इत्युक्ते यज्ञः इत्यर्थौ भवतः। विशेषतया एनं यज्ञं दशदिनानि यावत् विरामरहितः सन् ब्रह्मदेवः आचरितवानिति कारणात् अस्य 'ब्रह्मोत्सवः' इति नाम जातम्।

ब्रह्मोत्सवमेनं लोकक्षेमार्थं, नित्यपूजाहीनप्रायश्चित्तार्थं, नित्यपूजादोषप्रायश्चित्तार्थं तथा च सर्वाशुभनिवारणार्थं समाचरन्ति। एवञ्च भगवतः मूलबिम्बे (ध्रुवबेरे) स्थितस्य शक्तेः अभिवृद्ध्यर्थम् एनं ब्रह्मोत्सवम् आचरन्ति। अस्यैव 'महोत्सवः', 'तिरुनाल्लु', 'कल्याणोत्सवः' इति नामानि।

एकस्य आलयस्य प्रामुख्यता तत्र भूयमानानामुत्सवानामुपरि, आकर्षकयान्त्रिकसंख्यासमुदायाः ऊपरि, क्रियाकलापानामुपरि आधारितो भवति इति सर्वसाधारणविषयः। अस्मिन् कोणे पश्यामश्चेत् स्वामिनः वैभवस्य अनुसृत्यैव तिरुमलायां ब्रह्मोत्सवनिर्वहणं भवति। ब्रह्मोत्सवः प्रतिवर्षं भवति। नगरे अथवा ग्रामे सर्वत्रापि उत्सवभरितवातावरणं दृश्यते। उत्सवानन्दे गतस्यशोक विस्मरणं अस्माकं स्वभावः। प्राचीने एवम् अधुना बहु व्यत्यासः वर्तते। नानाविधानि परिवर्तनानि जातानि।

बहुभ्यः वर्षेभ्यः राजानः ब्रह्मोत्सवान् वैभवेन निर्वह्य चरित्रपुटेषु स्थानं प्राप्तवन्तः। पुरा प्रतिमासं ब्रह्मोत्सवः आचर्यते स्म। एवं वर्षे एकादशब्रह्मोत्सवाः आचरन्ति स्म। ते एव इदानीमपि अविच्छिन्नतया भवन्तीत्युक्ते तेषां दक्षताः एव प्रधानकारणीभूताः इति अवगन्तुं शक्नुमः। अनादिकालादेव बहवः महानुभावाः नानाविधान् व्ययान्, प्रयासान् च कृत्वा श्रीस्वामिने ब्रह्मोत्सवं प्रकल्प्य ब्रह्मोत्सवरूपीं ध्वजं प्रपञ्चे व्यापितवन्तः।

पुरा प्रतिमासं भूयमानः ब्रह्मोत्सवः अधुना श्रीस्वामिने एकमासे (सेप्टेम्बर् - अक्टोबर्) मध्ये साक्षात् ब्रह्मदेवेन आरब्धः इति कारणात् वैभवेन क्रियते। श्री स्वामिनः उत्सवेषु ब्रह्मोत्सवः अत्यन्त प्रधानः। एवं कथितं ब्रह्मोत्सवं वीक्ष्य स्वामिसेवातत्परेभ्यः पुनर्जन्म न भवति। एवञ्च वाहनसेवानां दर्शनमपि मुक्तिप्रदायकः भवति।

शेषवाहनम् - कुटुम्बश्रेयसे, हंसवाहनम् - ब्रह्मपदप्राप्तये, सिंहवाहनम् - धैर्यसिद्ध्ये मौक्तिकमण्डपवाहनम् - सकलसैभाग्यसिद्ध्ये, कल्पवृक्षवाहनम् - ऐहिकामुष्मिकफलप्राप्तये, सर्वभूपालवाहनम् - यशोप्राप्तये, मोहिन्यवतारः - मायामोहनाशनाय, गरुडवाहनम् - सर्वपापप्रायश्चित्तये, हनुमन्तवाहनम् - भगवद्भक्ति प्राप्तये, गजवाहनम् - कर्मविमुक्तये, सूर्यप्रभावाहनम् - आयुरारोग्यप्राप्तये, चन्द्रप्रभावाहनम् - मानसिकशान्तिप्राप्तये, रथोत्सवः - मनोवाञ्छाफलसिद्ध्ये, अश्ववाहनम् - कलिकल्मषनाशनाय तथा च चक्रस्नानम् - सकलपापविमोचनाय भवन्तीति पुराणवागिति कारणात् एतासु सर्वासु सेवासु सर्वेऽपि भागं गृहीत्वा श्रीस्वामिनः कृपापात्राः भवन्त्विति 'सप्तगिरिः' प्रार्थ्यते।

आगच्छन्तु! ब्रह्मोत्सवदर्शनं कुर्वन्तु! तरन्तु!

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


गौरवसम्पादकः-
श्री अनिल्कुमार् सिंघाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री आर्. वि. विजयकुमारः B.A. B.Ed.,
उपकार्यनिर्वहणाधिकारिणी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

वर्णचित्रविन्यासकः - श्री पि.शिवप्रसादः, ति.ति.दे.,
विश्रान्तचित्रकारः

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्केटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.





तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०६ सञ्चिका-०६





श्रीविकारिनामसंवत्सरस्य भाद्रपदकृष्ण विदिय तः
आश्वयुजकृष्ण विदिय पर्यन्तम् - १९४१



मुखचित्रम् - श्रीवारि गरुडोत्सवः (तिरुमल)
अन्तिमरक्षापुटः - श्रीवारि रथोत्सवः (तिरुमल)


## सङ्केतः
प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,
तिरुपति - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
संपर्कं कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# श्री आदिवराह गोविन्दा!!

## श्रीवराहस्वामिनः आलयं तिरुमला

तेलुगु मूलम् - मुद्धुकृष्णय्या उपाध्याय
संस्कृतानुवादः- डा.सि.आदिलक्ष्मी



वैकुण्ठं त्यकत्वागतः श्रीनिवासः वने एकस्मिन् वल्मीक प्रविष्टवान्। एकस्मिन् दिने वल्मीकात् बहिरागतः विहारार्थं गतवान्। तस्मिन्नेवसमये दूरे वराहस्वामिः स्वपरिवारेण साकं आगच्छति स्म। तं स्वामिनं दृष्ट्वा भीत्या श्रीनिवासः पुनः वल्मीके प्रविष्टवान्। वराहस्वामिः साक्षात् श्रीमन्नारायणयेव। अवतारद्वये अत्रैव वेङ्कटाचले निवासमकरोत्। वराहस्वामिः सागरोल्लघनं कृत्वा असुरान् निहत्य भूदेवीं संरक्षणं कृतवान्, ततः परं अस्मिन्नेव पर्वते निवासमकरोत्। अतएव अस्य पर्वतस्य 'वराहाचलमिति' नामागतम्। शमीकधान्यं व्यवसायं कर्तुं स्वपरिवारेणस्सह तत्रैव उषितः वराहः तत्धान्यापहरणार्थं आगतान् राक्षसान् निर्मूल्य स्वपरिवारेण साकं तस्मिन्नेवप्रदेशे कालं यापयति स्म। तत्र वल्मीकौ श्रीनिवासं दृष्ट्वा बहिरागन्तुं प्रार्थितवान्। श्रीनिवासः वल्मीकात् बहिरागतः। द्वयोः भगवद्रूपयोः समागमः अभूत्। तत्महाद्भतविशेषः। एकः नारायणः रुपद्वये एकस्मिन्नेवप्रदेशे मिलित्वा प्रश्नोत्तरैः सम्भाषणकरणमपि इतोऽपि महाद्भुतः। तस्मिन्समये श्रीनिवासः वराहं तत्रैव निवासार्थं शतयोजनविस्तीर्णभूभागं याचितवान्। 'लाभं विना धातुं न शक्यतेति वराहः प्रत्युवाच! तच्छ्रुत्वा श्रीनिवासः ''मम सविधे धातुं किमपि नास्ति'। परन्तु आगामिकाले कोट्यादि जनाः दर्शनार्थं अत्र आगच्छन्ति। तिरुमलायां त्वद्दर्शनमेव प्रथमतः करणीयम्। अनन्तरमेव मम दर्शनम्। एवमेव प्रथमाभिषेकं, नैवेद्यमपि तवैव प्रथमं भवन्ति। अनन्तरमेव मम तु करणीयम्। वराहस्वामिः तदर्थं अङ्गीकृत्य शतयोजनविस्तीर्णभूभागं श्रीनिवासाय दत्तवान्। तत्र कृतं अङ्गीकारपूर्वकवचनं अस्माकं ज्ञानोदयार्थमेव भवति। यतोहि वराहः, श्रीनिवासः उभौ एकस्वरूपौ। न तु भिन्नः। श्रीमन्नारायणस्य स्वरुपद्वयमेव।

अस्माभिः लोके येपृथ्वीं मदीयत्वेनभावनया भ्रमे निवसामः। पुनः धनार्जितं अथवा पित्रार्जितमिति भावनया निवसामः तत्सर्वं असत्यमेव। सर्वं वराहस्वामिनः अनुग्रहफलमेव। समस्त भूमण्डलं सागरात् राक्षसवलयात् संरक्ष्य वराहस्वामिः निवासयोग्यं कृतवान्। अतएव सर्वदा 'वराहस्वामिनः अनुग्रहमिति' स्मरणीयम्। श्रीनिवासः वराहस्वामिनं स्मरणार्थमेव धनं न दत्तवान् प्रथमदर्शनभाग्यं, अभिषेकं, नैवेद्यं च अनुगृहीतवान्।

अस्माकं विषयेऽपि तदेव अनुसरणीयमस्ति। सर्वं

भगवदधीनमिति भावनया स्वामिनं सर्वदा स्मरित्वा उपभोक्तुं अवकाशमागतेति भावनया वर्तनीयम्। प्रातः प्रथमं मृत्तिकास्नानं करणीयमिति तदानीं वराहस्वामिनं स्मरणीयमिति शास्त्रवचनम्। आहार पदार्थन् सर्वान् प्रथमं स्वामिनः निवेदनं कृत्वा भोक्तव्यम्। निवेदनेन भोज्यपदार्थसारं स्वामिः स्वीकरोति तत्र आहारदोषं परिहरति। तदेव निवेदनस्यान्तरार्थं भवति।

अनन्तरकाले तस्मिन् क्षेत्रे स्वप्रबल्यं वृद्धिं चकार वेङ्कटेश्वरः। इदानीमपि तन्नियमानुसारं तिरुमलायां भूवराहस्वामिनः प्रथम पूजा, निवेदनादयः उक्तरीत्या निर्वहणं कुर्वन्तः सन्ति। वराहस्वामिनः दर्शनादेव श्रीनिवासः सन्तुष्टः भवति। श्रीवराहस्वामीसम्बन्धिनः प्राचीन शासनानि न सन्यपि की.श १३८० संवत्सर काले शासने श्रीवराह-स्वामिनं 'वराहनायनार' इति नाम्ना, कीर्तितमस्ति। अनन्तरम् १४७६ संवत्सरकाले शासने एनं वराहस्वामिनं 'ज्ञानप्पिरान्' इति नाम्ना कीर्तितवन्तः।

श्रीवराहस्वामिनः प्रतिदिनं त्रिकालेषु वैखानसागमरीत्या अर्चननिवेदनादयः भवन्ति। नैवेद्यादयः श्रीनिवासस्वामिः निवेदनात्पूर्वमेव वराहस्वामिनः निवेदयन्ति। प्रति भृगुवासरे प्रातः काले अभिषेकमपि निर्वहन्ति।

**आलयनिर्माणशैली : -**

स्वामिपुष्करिणी वायुव्यभागे प्राच्यं दिशि भूमिः भग्नमिव वराहालयं प्रतिभाति। मुखमण्डपं, अर्थमण्डपं, अन्तरालं गर्भालयमिति चत्वारि भागैः आलयनिर्माणं निर्मितमस्ति । शिल्पैः सुशोभितं, रमणीयस्तम्भैः निर्मितं श्रीवराहस्वामीरालयमुखमण्टपे ब्रह्मोत्सव अन्तिमदिने श्रवणानक्षत्रे चक्रस्नानसन्दर्भे श्रीदेवी भूदेवी समेतः श्रीवेङ्कटेश्वरः, चक्रत्ताल्वार्सहितः तत्र आगत्य कैंकर्य्यं स्वीकुर्वन्ति। एतस्मिन् मुखमण्डपावरणे श्रीवराहस्वामी आलयस्य एकं प्रदक्षिणमार्गमस्ति। मुखमण्डपादन्तः प्रवेशेन अर्थमण्डपं द्रष्टुं शक्यते। एतदेव वराहस्वामी गर्भालयस्याभितः परिभ्रमणार्थं प्रदक्षिणमार्गवत् उपयोगं कयेति। अर्थमण्डपांदपिरग्रे गमनेन एकं लघु अन्तरालमस्ति। अस्य अन्तरालस्य बहिर्द्वारे उभयत्र शङ्खचक्रगदाधारिणः जयविजयौ विलसितौ। पुनः अग्रे गमनेन तत्र पञ्चाऽथवाषट् पाद विस्तीर्णचतुरसकारे। अन्तरालः वर्तते। अस्मिन्नन्तरालस्य गर्भालये श्रीभूवराहस्वामिनः विग्रहं द्विपादोन्नतं विलसति। उपरि हस्तौ शङ्खचक्रौ शोभितौ भवतः। वामोर्यां भूदेवीं स्थापितमिव भाति। मूलमूर्तिस्सह एकपादोन्नतं पञ्चलोहवराहमूर्तिः एतावदेवविस्तीर्णे श्रीवेङ्कटेश्वरस्य पञ्चलोहमूर्तिः, कानिचन सालग्रामादयः तत्र वर्तन्ते।

इतः पूर्वमेव २०१९ एप्रेल २३ तः २७ दिनाङ्कपर्यन्तं अस्मिन्नालये महासंप्रोक्षण कार्यक्रमाणि वैभवेन चालितानि। एवं तिरुमलक्षेत्रे विलसितं प्रथमदैवं श्रीवराहस्वामिः। अतएव 'तिरुमल' आदि वराहक्षेत्रमिति नाम्ना प्रसिद्धिं गता। अतः अत्यन्त प्रसिद्धिं प्राप्य स्थितं श्रीवराहस्वामिनं प्रथमं दर्शयित्वा पुनः श्रीवेङ्कटेश्वरमपि दर्शयित्वा आशिषं, कृतार्थत प्राप्नुमः।



# श्रीमदनन्तपद्मनाभव्रतम्



- श्रीमती एन्. उमादेवि

**पुराणमूलकत्वम् : पूर्वं पाण्डवानाम् अरण्यवाससमये भगवान् श्रीकृष्णः पाण्डवानां पुनः स्वराज्य लाभाय सकल दुःखो पशमनाय अनन्तपद्मनाभव्रतं उपदिष्टवान्। एतद् व्रतं भविष्योत्तर पुराणे वर्तते। अमुं व्रतविष्यं सूतपौराणिकः शौनकादि महामुनीन् उद्धिश्य निजगाद।**

**व्रतकथा -** पूर्वं द्वापरयुगे पाण्डवाः कौरवैः कपटद्यूते पराजिताः अरण्यवासं कुर्वन्तः अनेककष्टनष्ट दुःखानि अनुभवन्तः आसन्। श्रीकृष्णः तेषां दुःखोपशमनाय तान् सांत्वयितुं तत्रागच्छत्। ते सर्वे श्रीकृष्णं नमस्कृत्य उचितासने उपवेशित वन्तः। तदा धर्मराजः श्रीकृष्णं उद्धिश्य 'अहं दुःखेन सन्तप्तो भ्रातृभिः परिवारितः कथं मुक्तिर्वदास्माकं अनन्तात् दुःखसागरात्' इति प्रार्थिते सति श्रीकृष्णः धर्मराजं प्रत्युवाच। हे धर्मराज! पुरुषाणां स्त्रीणां सकल पापहरं सकलसौभाग्यदायकं वाञ्छितफलप्रदं अनन्तपद्मनाभव्रतम् एकमस्ति। एतद् व्रतं पुत्रपौत्राभिवृद्धिं ऐश्वर्यं, कीर्तिं च ददाति। एतद् व्रतं भाद्रपदशुक्लपक्षचर्तुदश्यां आचर्यते इति श्रीकृष्णेन प्रोक्तेसति धर्मराजः श्री कृष्णं दृष्ट्वा ''हे केशव! अनन्तः कः? तस्य स्वरुपं किम् इति पृष्टे सति श्रीकृष्णः एवमुक्तवान्''। हे पाण्डुतनय! अहमेव अनन्तः अन्यः कोऽपि नास्ति, सृष्टि स्थिति लयकारः अहमेव, कालगमनस्य आद्यः अहमेव, एवं भूतः अहं भूभारस्य लघूकरणाय सकल राक्षससंहारार्थं भूलोके वसुदेव गृहे जन्मलब्धवान्।

अहमेव श्रीकृष्णः इन्द्रः ब्रह्मविष्णुमहेश्वरस्वरुपः, सूर्यः, आदिशेषः, सर्वव्यापी ईश्वरः सकल जगद्रूपः भवामि। अहमेव परब्रह्मस्वरुपः, मामेव योगिनः ध्यायन्ति। मय्येव चतुर्दशमनवः, अष्टवसवः, द्वादशादित्याः, एकादशरुद्राः, सप्तऋषयः, समुद्राः, पर्वताः, नद्यः वृक्षाः, नक्षत्राणि, दिशः, भूमिः, पातालं, भूर्भुवरादिलोकाः सन्ति। अत्र संशयोमाभूत्। सर्वं अहमेव। धर्मराजः श्रीकृष्णवचनानि श्रुत्वा एतद् व्रतं कथं कर्तव्यं, किं फलं, का देवता पूजनीया, इतः पूर्वं केन आचरितं विस्तरेण वदत्विति श्रीकृष्णम् अपृच्छत्।

श्रीकृष्णः एवमुवाच - पूर्वं कृतयुगे सुमन्तु नामकः ब्राह्मणः वेदशास्त्रसम्पन्नः आसीत्। वशिष्टगोत्रोद्भः सुमन्तुः रुपयौवनसम्पन्नां भृगुवंशसञ्जातां दीक्षा नाम्नीं कन्यां शास्त्रोक्तरीत्या परिणीतवान्। किञ्चित् कालानन्तरं तयोः दम्पत्योः सर्वलक्षण सम्पन्न शीलानाम्नी पुत्रिका सञ्जाता। सा बालिका मातृगृहे दिन दिन प्रवर्धमाना अभूत्। माता दीक्षादेवी ज्वरपीडिता कृशा नदीतीरे मरणं प्राप्य स्वर्गलोकमगमत्। अनन्तरं सुमन्तुः श्रौतस्मार्तकर्माणि आचरितुं द्रुष्ट स्वभावां तामसगुणयुक्तां सर्वदा कलहशीलां कर्कशा नाम्नीं कन्यां विवाहमकरोत्। मातुः मरणानन्तरं शीला गृहकार्यनिर्वहणे पितुः शुश्रूषायां देवपूजाकरणे च श्रद्धां प्रदर्शयन्ती आसीत्। पिता सुमन्तुः पुत्रिकां रुपयौवनसम्पन्नां दुष्ट्वा विवाहं कर्तुं निश्चयं अकरोत्। तदा कौण्डिन्यमहामुनिः सकलविद्या पारंगतः गुर्वाज्ञां स्वीकृत्य सुमन्तु गृहं जगाम। सुमन्तुः कौण्डिन्यमहामुनिं अर्घ्य पाद्यादियिः सत्कृत्य स्वस्य पुत्रिकां शीलां तस्मै दत्वा कन्यादानं चकार। सुमन्तुः शीलां जामातृगृहं प्रतिप्रेषणसमये

कमपि मधुरपदार्थं दातुं भार्यां कर्कशां आहूय पृष्टवान्। सा कर्कशा भर्तृवचनं श्रुत्वा महता कोपेन गृहान्तरं प्रविश्य "किमपि नास्ति गच्छ गच्छ" इति वदन्ती द्वारं पिहितवती। सुमन्तुः विचिन्त्य सक्तुचूर्णं दत्वा दम्पत्यौ प्रेषयामास। कौण्डिन्यमहामुनिः भार्यया शीलया सह स्वस्य आश्रमं प्रति वृषभ शकटे अगच्छत्। मध्याह्नसमये मार्गमध्ये सरस्तीरे शकटं उपस्थाप्य माध्याह्नक्रियाः अनुष्ठातुं सरः समीपं गतवान्। तस्मिन् दिने अनन्तपद्मनाभ व्रतं प्रचलति स्म। तत्र सर्वाः स्त्रियः रक्तवस्त्राणि धृत्वा भक्ति श्रद्धाभ्यां अनन्तपद्मनाभ स्वामिनं पूजयन्त्यः आसन्। शीला ता स्त्रियः समीप्य "एतत् किं व्रतम्, तस्य नाम किं किमर्थं भवत्यः व्रतमाचरन्ति" इति पृष्टवती। ताः स्त्रियः "हे शीले! सौभाग्यवति एतद् व्रतं अनन्तपद्मनाभ व्रतमिति उच्यते। अस्य व्रतस्य आचरणेन अनन्तफलानि सम्भवन्ति। अस्मिन् व्रते भाद्रपदशुक्लपक्षचतुर्दश्यां नदीतीरे पद्मनाभ स्वामिनं सम्पूज्य कथा श्रवणं कर्तव्यम्। तस्मिन् दिने नद्यां स्नात्वा परिशुद्धवस्त्राणि धृत्वा पूजा स्थले गोमयेन अनुलिप्य अष्टदलपद्मे सर्वतो भद्रमण्डलं कुर्यात्। तत्र श्वेततुण्डुलचूर्णेन रंगवल्लीभिः अलंकृत्य दक्षिणपार्श्वे कलशं स्थापयित्वा तत्र अनन्तपद्मनाभस्वामिनम् आवाहयेत्।

कृत्वा दर्भमयं देवं श्वेतद्वीपस्थितं हरिम्।
समन्वितं सप्तफणैः पिंगलाक्षं चतुर्भुजम्।।

एवं प्रकारेण अनन्तपद्मनाभस्वामिनं कलश मण्डलप्रतिमासु आवाहनं कृत्वा कल्पोक्तप्रकारेण षोडसोपचारपूजां प्रदक्षिण नमस्कारांच कृत्वा चतुर्दश ग्रन्थिभिः कुंकुमान्वितं नवतोरं कलशस्य पुरतः उपस्थाप्य संपूज्य यथाशक्ति गोधुमचूर्णेन अष्टविंशति संख्याकान् अपूपान् कृत्वा भगवतः निवेदनं च कृत्वा तोरं वामहस्ते धृत्वा चतुर्दश अपूपान् ब्राह्मणानां वायनरुपेण दत्वा अवशिष्टानपूपान् मित्रैः वान्धवैः भोक्तव्यम्। अस्मिन् व्रते पूजाद्रव्याणि सर्वाणि चतुर्दश संख्याकानि भवितव्यानि। अनन्तरं ब्राह्मणसमाराधनं कृत्वा अनन्तपद्मनाभस्वामिनं ध्यायेत्। हे शीले! एवं रीत्या प्रति संवत्सरं व्रतपरिसमाप्तिं कृत्वा नूतन तोरं धृत्वा पुनः व्रतं आचरितव्यम्। चतुर्दश वत्सरे उद्यापनं कर्तव्यम्।" इति सविस्तरं व्रत विधानं ऊचुः। शीला तत्र सरसि कौण्डिन्येन सह स्नानं कृत्वा स्त्रीणां साहाय्येन अनन्तव्रतं आचरित्वा नूतनतोरं धृत्वा पित्रा दत्तं सक्तु चूर्णं ब्राह्मणाय वायनदानं कृत्वा अवशिष्टं शीलापि भर्त्रा सह भुक्त्वा शकटे उपविश्य आश्रमं प्रतिजगाम। अनन्तरं व्रतप्रभावात् आश्रम प्रान्तं सर्वं स्वर्णमयं सञ्जातम्। कौण्डिन्यदम्पत्योः अष्टैश्वर्याणि सम्प्राप्तानि। महर्षेः आश्रम प्रान्तं सम्पत् समृध्या अतिथि सत्कारैः शान्तमृगैः विराजितमासीत्। शीलापि सकल भूषणैः विविध नूतनवस्त्रैः संयुक्ता अभूत्। एवं प्रकारेण भूलोके एतद् व्रतं प्रसिद्धिम् अभजत्।

अनन्तरं एकस्मिन् दिने शीलायाः वामहस्ते धृतं तोरं द्रुष्ट्वा द्रुष्टबुद्धिः कौण्डिन्यः "हे शीले! किमिदं तोरं किमर्थमिदं वामहस्ते धृतवती। मां वशीकर्तुं वा अन्यं पुरुषं वशीकर्तुं वा" इत्यपृच्छत्। हे नाथ! अहं अनन्तपद्मनाभस्वामिनः तोरं धरामि। तस्य अनुग्रहात् अस्माकं धन धान्य सम्पत् समृद्धिः सञ्जाता, अतः अहं एतत् तोरं धृतवती इत्युक्तवत्यां सत्यां कौण्डिन्यः कोपाविष्टः अनन्त इति देवः अस्ति वा इति भगवन्तं दूषयन् तोरं बलात्कारेण स्वीकृत्य प्रकाशमाने अग्नौ निक्षिप्तवान्। शीला हाहाकारं कुर्वन्ती धावन्ती तत् तोरं उद्धृत्य क्षीरे निक्षिप्तवती। ततः कौण्डिन्यस्य दुष्टकर्मभिः क्रमेण तयोः सम्पत् विनष्टा अभूत्। तस्य पशवः चोरैः अपहृताः, गृहं दग्धमसीत्। सर्वाणि वस्तूनि द्रव्याणि च विनष्टानि। तस्य मित्र बान्धवैः विरोधः समुत्पन्नःगृहे महत् दारिद्र्यं च सम्प्राप्तम्। कौण्डिन्यमुनिः गतं स्मृत्वा दैवदूषणादेव मह्यं दुःखं नष्टं च सञ्जातम् इति मनसि चिन्तयन् अनन्तपद्मनाभनामं जपन् निर्मानुष्ये अरण्ये गच्छन् एकं आम्रवृक्षसमीपं गतवान्। स वृक्षः पुष्पफलभरितोऽपि पशुपक्ष्यादयः तत्र न गच्छन्ति वृक्षं न स्पृशन्ति। कौण्डिन्यमुनिः तं द्रुष्ट्वा हे वृक्ष राज! भवान् अनन्तनामकं दैवं दुष्टवान् वा" इति पृष्टवान् अनन्तः क इति अहं न जानामि इति वृक्षः अवदत्। कौण्डिन्यमुनौ त्वं किञ्चित् दूरं गते सति तत्र तृणमध्ये इतस्ततः प्रधावन्तीं सवत्सांगां मुनिः ददर्श। किं अनन्तः त्वया ईक्षितः" इति कौण्डिन्यः तामप्युवाच। हे द्विज!अनन्तं अहं नवेद्मि इति गौरपि अवादीत्। पुनः किञ्चिद्दूरं गत्वा कौण्डिन्यमुनिः शाद्वलेस्यितं गोवृषं, अनन्तरं रम्यं

पुष्करिणीद्वयं अन्योन्यं जलकल्लोलैर्वीचीपर्यन्तसङ्गमम्, छन्नं कुमुदकल्हारैः कुमुदोत्पलमण्डितम् सेवितं भ्रमरैर्हंसैश्चक्रकारंडवैर्भकैः तथा व्रजन् अग्रे गार्दभं, कुञ्जरं च द्रुष्ट्वा तान् सर्वान् 'युष्माभिः अनन्तदेवः वीक्षितो वा इति उवाच। ते सर्वेऽपि अनन्तदेवः अस्माभिः न द्रुष्टः इति प्रत्युत्तरं दद्वुः तेषां समाधानं श्रुत्वा ब्राह्मणः विषादवदनः निर्विण्णः मूर्छितश्च अभूत्। तदा अनन्तपद्मनाभः तस्मिन् ब्राह्मणे दयां करुणां च प्रदर्श्य वृद्धब्राह्मणरुपेण प्रत्यक्षोभूत्वा हे विप्रोत्तम! एह्येहि अहं तव अनन्तं दर्शयामि, इत्युक्त्वा

**प्रवेशयित्वा स्वगृहं गृहीत्वा दक्षिणं करम्।**
**स्वां पुरीं दर्शयामास दिव्यनारी गणैर्युताम्।**
**तस्मिन्निविष्टमात्मानं नरसिंहासने शुभे।**
**पार्श्वस्थं शङ्खचक्राढ्यं सदा गरुडसेवितम्।।**
**दर्शयामास विप्राय पूर्वोक्तं विश्वरुपिणम्।**
**विभूति भिरिहाष्टा भिरनन्तं विश्वतोमुखम्।।**
**कौण्डियमुनिः अनन्तं द्रुष्ट्वा सन्तुष्टान्तरङ्गः एवं स्तुतवान् ।**



**नमो नमस्ते गोविन्द नारायण जनार्दन।।**
**त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु।**
**वरेण्य यज्ञपुरुष प्रजापालनतत्पर।।**
**प्रलयाग्नि सहस्त्रस्य मोहद्वीपशतस्य च।**
**संसारवारधेर्नैकाय नमस्तुभ्यं जनार्दन।।**
**प्रमाणेन दिशश्चैव पातालं भूर्भुवारादिकम्।**
**सृजते ब्रह्मरुपेण त्रायते विष्णुरुपधृत्।।**
**संहत्रे रुद्ररुपेण नमस्तुभ्यं त्रिमूर्तये।**
**पापोऽहं पापकर्माहं पापात्मा पापसम्भवः**
**त्राहि मां पुण्डरीकाक्ष शरणागतवत्सल।**
**अद्य मे सफलं जन्म जीवितं च सुजीवितम्।।**
**यत्तवांघ्रियुगाम्भोजे मन्मनोभ्रमरायते।**
**ततस्तुष्टोह्यानन्तोऽपि ददौ तस्मै वरत्रयम्।।**
**दारिद्रयनाशनं धर्मं विष्णुलोकं च शाश्वतम्।**
**लब्ध्वा वरत्रयं विप्रोप्युवाच सुरसत्तमम्।।**
**कश्चूतः का च गौः कोऽपि वृषः किं तत्रोद्वयम्।**
**कःखरः कुञ्जरः कोवा को द्विजो ब्रूहि केशव।।**
**कौण्डिन्यमुनिः प्रश्नानां भगवन् विष्णुः एवं समाधत्तवान्।**
**चूतं विद्धि महान् विद्वान् विद्यागर्वसमन्वितः।**
**शिष्येभ्यो न ददौ विद्या तस्माद्वृक्षोऽभवद्द्विजः।।**
**सा गौर्धनाढयो विप्रेभ्यो न ददाति सु सत्कृतम्।**
**अन्नं तस्मात्तृण भुविनात्ति तत्कारणात्ततः।।**
**वृषोऽपि गर्वयुक्तः सन् ऊषरक्षेत्रदो नृपः।**
**धर्मोधर्मा सरोयुग्मं स खरः परनिन्दकः।।**
**कुञ्जरोसौद्विजश्रेष्ठ धर्मविक्रयिकोनरः।**
**इत्युक्तं च मया सर्वमनन्तो विप्ररुपधृत्।।**
**चरानन्तव्रतं त्वं च तव वर्षाणि पञ्च च।**
**ततस्तुष्टं प्रदास्यामि नक्षत्र स्थानमुत्तमम्।।**
**इहलोकेतु विपुलान् सर्वान्कामानुवाप्नुहि।**
**इति दत्वावरं देवस्तत्रैवान्तरधीयत।।**

अनन्तरं कौण्डिन्यमुनिः स्वगृहंगत्वा उत्तमम् अनन्तव्रतं आचरित्वा शीलया सह धर्मात्मा इहलोके इष्टान् भोगान् भुक्त्वा परलोके सकुटुम्बं नक्षत्रमण्डलं प्राप्तवान्। स द्विजः कल्पान्तरस्थायी सम्भूतः अद्यापि नक्षत्र मण्डले द्रुश्यते। हे धर्मनन्दन! पुरा अगस्त्यमुनिः एतद् व्रतं आचरित्वा मर्त्यलोके प्राचरितवान्। सागर, भरत, दिलीप, हरिश्चन्द्र जनक महाराजाः तथा अन्ये राजानश्च एतद् व्रतं आचरित्वा राज्यसुखं अनुभूय अन्ते स्वर्गलोकं गताः। हे धर्मराज! व्रतानां उत्तमं व्रतं तव कथितम्। एतद् व्रतं आचर्य जनाः सर्वपापेभ्यो विमुक्ताः सुखं प्राप्नुयुः। त्वमपि एतद् व्रतं आचर्य दुःख विमुक्तः सुखमनुभवतु। ये जनाः एताम् व्रत कथां सततं पठन्ति, श्रुण्वन्ति ते इहलोके सकल सम्पदः भोगांश्च अनुभूय सर्वपापैः विमुक्ताः परलोके उत्तमां गतिं प्राप्नुयुः।



तिरुमलतिरुपतिदेवस्थानम्

# तिरुमल

# श्रीवेङ्कटेश्वरस्वामिनः वार्षिक ब्रह्मोत्सवः

३०-०९-२०१९ तः ०८-१०-२०१९ पर्यन्तम्

३०-०९-२०१९
इन्दुवासरः
सायं
ध्वजारोहणम्

३०-०९-२०१९
इन्दुवासरः
रात्रौ
महाशेषवाहनम्



०१-१०-२०१९
भौम्यवासरः
प्रातः
लघुशेषवाहनम्





०१-१०-२०१९
भौम्यवासरः
रात्रौ
हंसवाहनम्



०२-१०-२०१९
सौम्यवासरः
रात्रौ
मौक्तिकमण्डपम्



०३-१०-२०१९
बृहस्पतिवासरः
प्रातः
कल्पवृक्षवाहनम्



०२-१०-२०१९
सौम्यवासरः
प्रातः
सिंहवाहनम्



०३-१०-२०१९
बृहस्पतिवासरः
रात्रौ
सर्वभूपालवाहनम्

०४-१०-२०१९
भृगुवासरः प्रातः
आन्दोलिकायां मोहिन्यवतारः



०५-१०-२०१९
स्थिरवासरः
प्रातः
हनुमद्वाहनम्



०५-१०-२०१९
स्थिरवासरः
प्रातः
सुवर्णरथरङ्गडोलोत्सवः

०६-१०-२०१९
भानुवासरः
प्रातः
सूर्यप्रभावाहनम्



०५-१०-२०१९
स्थिरवासरः
रात्रौ
गजवाहनम्



# तिरुमलदैवं परदैवतं नः

संस्कृतानुवादः - एम्.प्रफुल्ला

तेलुगु मूलम् -
श्री महाभारतम् गुरुस्वामीनायुडु



आल्वारकृत तमिलप्रबन्धेषु वेड्गड, वेङ्गमुडैयान् शब्दयोः प्रस्तावना अस्ति। वेङ्गड शब्दस्य गिरिरिति, वेङ्गमुडैयन् शब्दस्य प्रवतनाथः, गिरिराजः इत्यर्थाः।

एतेषां आल्वाराणां देशकालप्रान्ताः, जातिकुलवृत्तयः च भिन्नाः। कुलशेखराल्वारः राजा। तिरुमङ्गयाल्वारः नायकः। पेरियाल्वारः अर्चकः। नम्माल्वारः सामन्तः। अपि च पोय्गै, पूदत्त, पोयाल्वारादय योगिनः। तेषु ब्राह्मणाः शूद्राः च सन्ति। तेषां प्रबन्धैः ज्ञायते यत् तेषां वृत्तिप्रवृत्तयः भिन्नाः इति। ते विश्रामदिनेषु दक्षिणभारतस्थ वैष्णवक्षेत्रान् निषेव्य तत्रस्थ विशेषान् स्वीयप्रबन्धेषु सुभगं वर्णितवन्तः। प्रसङ्गवशात् अर्चामूर्तेः, पुण्यक्षेत्राणां परिचयः च कृतः।

सर्वैः आल्वारैः केवलं वेड्गड, तिरुवनगरं दृष्टौ। क्षेत्रपर्यटनसमये ते क्षेत्र वैशिष्ट्यं, प्रकृतिसौन्दर्यं, उत्सवविशेषान्, अर्चामूर्तिस्तुतिः च पाशुरनामक साहित्ये विरचितवन्तः। एते पाशुराः एव प्रबन्धाः इति प्रसिद्धाः।

आल्वारैः सर्वैः तिरुमलक्षेत्रं वेङ्गडमिति संज्ञितम्। पेरियाल्वारकृत एकस्मिन् पाशुरे तिरुमल संज्ञा दृश्यते। एषः पाशुरः प्रक्षिप्तः इति केषाञ्चिन्मतः। अर्थात् सर्वैः वेङ्गड शब्दः एव प्रयुक्तः। शेषाचलः, सिंहाचलः, नारायणाद्रिः, श्रीनिवासः - एते शब्दाः तेषां न परिचितमिति ज्ञायते। तत्समये प्रायशः वेङ्कटाद्रिः एव सुप्रसिद्धः विष्णुक्षेत्रः स्यात्। परन्तु तिरुमलवासी वेङ्कटेश्वरः वैष्णववतारः इति विषये आल्वरेषु एकाभिप्रायः अस्ति, यतः ते सेर्व वैष्णवभक्ताः एव।

आल्वाराणामभिमते रिग्यः पवित्राः। भक्तान्, भावुकानुद्धर्तुं विष्णुः गिरिषु आत्मानं प्रत्यक्षीकृतवान् इति

तेषां भावना। अतः वेङ्कटाद्रिनिलयः देवः स्वयंभूः न तु मानवकृतशिलाविग्रहः। ते विष्णोः शङ्खचक्रगदाद्यायुधानि, तुलसीमलां च स्वीय कृतिषु शंसितवन्तः। तोषां मुख्यदैवतं विष्णुरपि, तमेव रामः, कृष्णः, पद्मनाभः, दामोदरः इत्यादि रुपेषु च अवलोकिताः। क्षीरसागरशायी नारायणः मोहिनीरुपं धृत्वा राक्षसान् वञ्चितवान् इति, रामावतारे रावणं हतवानिति, कृष्णावतारे अर्जुनस्य भ्रान्तिं विधूय कर्तव्यमुपदिष्टवानिति, स एव अधुना वेङ्कटाद्रौ कृतनिवासः इति तेषां विश्वासः।

पोय्गै, पूदत्त, पेयाल्वाराः आद्याः, द्विसहस्रवर्षात् पूर्वमेव उषिताः। तोण्डैनाडु अथवा तोण्डमण्डलं तोषां मातृभूमिः। ते वडनाडु मध्यदेशं त्यक्त्वा उत्तरदेशं प्रस्थिताः। तत्र वेङ्कटनाथस्य मूर्त्या आकर्षिताः ते तत्प्रदेशं प्राप्तुमुद्यक्ताः। वेङ्कटाद्रिशिखरं प्राप्तुं मार्गः सुगमः नासीत्। सर्वं पर्वतमयं। आल्वारकृतपाशुरेषु वेङ्कटाचलवर्णनेन तत्प्रदेशं साक्षात्भवति। महोन्नतैः निशितैः दुर्गमैः शिखरैः युक्ताः पर्वतपङ्तयः, महाटव्यः, वेणुयष्टिकेषु गमनागमनं, गमनावरोधकाः गजसमूहाः, तान् बद्धुं इतस्ततः धावन्तः आटविकाः, मार्गे अत्यन्त भयदाः अजगराः, व्याघ्राः, सिंहाः च। एतान् सर्वान् तीर्त्वा अनेक क्रोशानि गत्वा शैलपङ्क्तिमारुह्य आल्वाराः वेङ्कटनाथं प्राप्तवन्तः। धैर्यमवलम्ब्य, क्लेशान् विषह्य देवस्य पुरतः स्थितानां तेषां आनन्दः, अनुभूतिः पाशुरेषु दृश्यते। प्राकृतिकसौन्दर्यः, रमणीयाः शैलपङ्कतयः, शीतलवायुः पर्वतसानुषु परिमलं प्रसरन्तः अनेकाः पुष्पवृक्षाः, इतस्ततः प्रवहन्त्यः सरितः - एतत्सर्व दृष्ट्वा ते संतुष्टाः। परन्तु तत्र प्रादुर्भूतः देवः तानत्यन्तं वशीकृतवान्। तस्य दर्शनेन क्लेशः विस्मृतः। उपसैलमधरुढाः इवासीत्। यः पर्वतः देवस्य मूलस्थानमभवत् तत्पर्वतस्य महिमापि उत्कृष्टा इति अचिन्तयन्। एतेषां आल्वाराणां समये क्षेत्रमाहात्म्यग्रन्थाः न विरचिताः।




वेङ्गडस्थः देवः मुक्तिदायकः, पापान् हरति, स एव सर्वलोकानां प्रभुः, भक्तजनहितार्थं स्वयं तत्र प्रादुर्भूतः - इत्यं आल्वाराः संपूर्णेन मनसा वर्णितवन्तः। वेङ्कटनाथः विष्णुरिति तेषां निश्चयः। तस्य मूर्तेः वक्षस्थले पुष्पमध्ये श्रीमहालक्ष्मीः विराजते। सः तिरुवेङ्कडस्य प्रभुः श्रीमन्नारायणः एव। वेङ्कटपतिः नीलवर्णः, चन्दनचर्चितः पुष्पमालापूर्णः, कण्ठे तुलसीमालालंकृतः, पीताम्बरालंकृतः, पादयोः उपरि पुष्पनिचयः - एवामासीत् श्रीमन्नारायणस्य अर्चामूर्तिः। अटव्यां वृक्षात् वृक्षं संचरन्तः, फलपुष्पान् विकिरन्तः वानराः तत्र तत्र दृश्यन्ते। दूरग्रामेभ्यः आगताः भक्तजनाः, विशेषतः द्वादश्यामागताः जनसमूहाः वेंकटनाथं स्तुवन्तः धूपदीपादीन् समर्प्य साष्टाङ्गं नमस्कारानकुर्वन्। पुष्पालंकृतस्य वेङ्कटनाथस्य विग्रहः भक्तजनान् पुलकितगात्रान् करोतिस्म।

तिरुमलिशै आल्वारः चतुर्थः। तस्य जन्मस्थलं तिरुमलिशै अथवा महीसारपुरः। सः चतुर्दशपाशुरेषु वेङ्कटनाथं प्राशंसत्। पर्वतपङ्तयः, अरण्यः, वेणुवृक्षाः, लताः, वृक्षाः, पुष्पवनानि, सरितः, वनचराः - एते सर्वे तेन विस्तरेण वर्णिताः। सः अपि इतस्ततः चरन्तः गजान् दृष्टवान्। वेङ्गडस्थं दैवं तेन वेङ्गड, तिरुवेङ्गडत्तान्, वडवेङ्गडत्तान् इति कीर्तितः। वेङ्गडनाथः लक्ष्मीदेव्याः पतिः श्रीमन्नारायणः इति प्रोक्तः। आद्याल्वारत्रयं देवालयमस्तीति नालिखत्। एषः आल्वारः देवालये देवतामूर्तिरस्तीति सुस्पष्टं उक्तवान्। परितः घनारण्यः आसीत्। अरण्यं छित्वा मार्गं निर्मितम्। भक्ताननुग्रहीतुं देवः स्वयं

अरण्यं छित्वा मार्गं परिकल्प्य पर्वतस्योपरि पादौ निधायास्तीति, भक्ताः पादयोः पुष्पार्चनं समर्पयन्तीति आल्वारस्य भावना। उच्चैः पर्वतस्योपरि स्थितं देवं सर्वाभ्यः दिशाभ्यः द्रष्टुं शक्यते। मधुर, शीतलजलपूर्णैः प्रवाहैर्युक्तं वेङ्कडं देवतानां मानवानां च सेव्यः इत्युक्तः।

पर्वतस्योपरि मण्डपः भवेत् नाम। तस्मिन् काले देवतानां कृते आलयनिर्माणः संप्रदायः। परन्तु वेङ्कडनाथाय आलयं निर्माय कुड्यान्तरे स्वामिनः प्रकाशः न रुद्धः। अत एव कस्यचित् कस्माचित् प्रदेशादपि द्रष्टुं, स्वयमागत्य पादयोः पुष्पान् समर्पयितुं, नमस्कर्तुं अनुकूलः व्यवस्था स्यात्। तत्र कश्चित् नियतः पूजाविधानः आसीदिति प्रमाणीकर्तुं आधाराः न सन्ति। भक्तजनाः यथाभिमतं आराधयन्तिस्म।

कुरवनामकाः स्थानिक ग्रामीणाः क्रूरमृगान् मार्गयन्तिस्म। ते अरण्येषु, पर्वतेषु, वप्रेषु न्यवसन् इति, ते गजान् बध्वा तान् भारवहनादिषु कार्येषु अयोजयन् इति ज्ञायते। आदौ पर्वतस्योपरि वड्डेरनामकाः आदिवासिनः आसन् इति, कर्णाटदेशादागताः कुरवाः तान् विद्रावयित्वा तं देशं आक्रमन् इति लिखितम्। आदौ तेषां नायकः नासीत्। यदा जनानां मध्ये कलहाः व्यववर्धन्त तदा कोमन्द कुरवप्रभुः नामकः जनानां रक्षकः अभवत्। यावद् यादवराजवंशः आरब्धः तावत् एवमेवासीत्। यादवराजः पल्लवः इति प्रवादः आसीत्। स्थीयतां तद्विवादः। कुरवानां पल्लवानां मध्ये विरोधः आसीदिति तिरुमळिशै आल्वारस्य पाशुरेषु उक्तः।

आटविकाः कुरवाः कालक्रमेण कृषिकर्म आरभ्य क्षेत्रेषु प्रवाहैर्युक्तं संवर्धिताः इति ज्ञायते।

उपर्युक्त चत्वारः आल्वाराः ४०-५० वर्षादनन्तरं बेरदेशे कोल्लिनगरे दृढव्रतस्य पुत्रः कुलशेखराल्वारः जातः। अत्रान्तरे वेङ्कडे परिणामाः संवृत्ताः इति ज्ञायते। पेरुमाल् तिरुमोलि ग्रन्थे कम्बुका, चम्पक वृक्षाणां प्रस्तावः अस्ति। तथा च लघुः देवालयः आसीदिति केषाञ्चित् संभावना। वेड्गडे नील् वाळल् नामक बृहद्वारस्य उल्लेखः अस्ति। आल्वारस्य जन्मान्तरे आलयस्य देहली भवितुमिच्छा अपि लिखितम्। अतः लघु देवालयस्य अस्तित्वं सूचितम्। अर्चकः महाद्वारं तीर्त्वा अन्तः प्रविश्य पूजयन्तिस्म इति, भक्ताः बहिः स्थित्वा अर्चयन्तिस्म इति वेङ्कडक्कोन् - ४,३ पाशुरेषु उक्तः। अन्यस्मिन् पाशुरे देवालयद्वार प्रस्तावनापदमस्ति। देहलिरुपे स्थितानां वेङ्कटरमणस्य प्रवाल, पल्लव सदृश वदनदर्शनभाग्यं निरन्तरं भवतीति कुलशेखराल्वारस्य चिन्तनमिति स्पष्टम्। अद्यापि महाद्वारस्थ देहलीं कुलशेखरपडि इति कथ्यते।

कुलशेखराल्वारस्य कालात् ३०-४० वर्षादनन्तरं पाण्ड्यदशे नम्माळ्वारस्य जन्म समभवत्। तस्मिन्नभिमते वेङ्कटपतिः महामयावी, वैकुण्ठनाथः साक्षाद्विष्णुः। सः वेड्गडपर्वतोपरि दृश्यते। एषः पर्वतः पवित्रः, वैकुण्ठसदृशः, वैकुण्ठादपि श्रेष्ठः। पापापहारी पर्वतः उद्वृत्तफणावलियुतः आदिशेषः इति तस्य भावना। एषः गिरिः शेषाचलः इति ख्यातः। पर्वतस्योपरि स्थितः मूर्तिः नीलमेघमनोहरः, देवदेवः, जगत्कारणः, परमः, त्रिलेकस्वामी, नारायणः, लक्ष्मीरमणः एव। सः सर्वेषां माता च, पिता च। तस्य वक्षस्थले श्रीदेविः अस्ति। यः तस्य पादानाश्रयति तस्मै मुक्तिं प्रयच्छति। अतः अन्यान् देवान्



शरणं मा गच्छेति समादिष्टवान्। वार्धक्यात् पूर्वमेव वेङ्कडपर्वतमारुह्य तत्रस्थ देवाय धूपदीपपुष्पतोयानि समर्पयेदिति तस्य दृढाभिप्रायः। यः वेङ्कडं गच्छति सः सर्वं विस्मृत्य, अहंकारं त्यक्त्वा, गीतानि गायन्तः देवस्य पुरतः तिष्ठेत। तत्र जातिभेदाः, दैवमानवभेदाः नास्ति। अपि च जडः, जीविः समाः। - एतानुल्लेखान् परिशील्यते चेत् वेङ्कडस्थ देवालयं गन्तुं व्यवस्था आसीदिति, स्वयं देवमर्चयितुं सौकर्यमासीदिति ज्ञायते। एषः आल्वारः स्वीय रचनायां वेङ्कटनाथमवर्णयत्। शंखचक्रशाङ्गगदाधरः महाविष्णुः भक्तानां प्रत्यक्षः भूत्वा शरणागति तत्त्वमुपादिशदिति उक्तवान्। अर्चामूर्तेः वक्षस्तले अलमेलुमङ्गताय्याः अस्तित्वं लक्षित्वा सा तं मूर्ति आश्रितवतीति अलिखत्। वेङ्कटमूर्तेः पादौ महिमानं, सौन्दर्यं वर्णितवान्। वेङ्कटनाथः एकाकी अपि तस्मिन् मूर्तित्रयं निगूढमस्तीति उक्तम्।

एवं आल्वाराः सर्वे वेङ्गडनाथस्य अर्चावतारं वर्णयित्वा, भक्तजनानुद्धर्तुं आत्मानं प्रत्यक्षीकृतवानित्युक्त्वा, शान्तिः तृप्तिः यावदाप्नुवन्ति जनाः तावत्पर्यन्तं तं मूर्ति अर्चयेयुः इति सूचितवन्तः।

सर्वदेवनमस्काराः उपासनाः तिरुमलेशं गच्छतीति आल्वाराणां दृढविश्वासः। जनाः यथा परिचितं तथैव पूजां कुर्वन्तिस्म। दव्यिनामानि कीर्तयित्वा, देवस्य पुरतः दीपं प्रज्वाल्य, पादौ प्रक्षाल्य, धूपगन्धपुष्पाणि समर्प्य नमस्कुर्वन्तिस्म। एषः प्रस्तावः आल्वाराणां पाशुरेषु बहुवारं दृश्यते। बाष्पापूपैः मालाभिः मूर्तेः अलंकरणमत्र दृश्यते इति उक्तम्। भक्तजनैः कृत पूजा एवात्र प्रधानमिति तेषां विश्वासः। वस्तुतः वेङ्कडं नामास्माकं देहमिति, तत् दैवं अस्मासु विद्यते इति सुदृढं व्यक्तीकृतवन्तः।

एवं तिरुमलक्षेत्रे स्थितः पर्वतदैवमेव अस्मत्परदैवतमिति आल्वाराः स्वीय पाशुरेषु अवर्णयन्। आल्वाराः इव वयमपि सर्वे तिरुमलदैवमाश्रित्य धन्याः भवेम।



# श्री गणेशस्तोत्रम्



**श्रीगणेशाय नमः नारद उवाच।**

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम्।
भक्तवासं स्मरेन्नित्यमायुःकामार्थसिद्धये ।।१।।

प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम्।
तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ।।२।।
लम्बोदरं पञ्चमं च षष्ठं विकटमेव च।
सप्तमं विघ्नराजेन्द्रं धूम्रवर्णं तथाष्टमम् ।।३।।
नवमं भालचन्द्रं च दशमं तु विनायकम्।
एकादशं गणपतिं द्वादशं तु गजाननम् ।।४।।
द्वादशैतानि नामानि त्रिसन्ध्यं यः पटेन्नरः।
न च विघ्नभयं तस्य सर्वसिद्धिकरः प्रभुः ।।५।।
विद्यार्थी लभते विद्यां धनार्थी लभते धनम्।
पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम्।। ।।६।।
जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत्।
संवत्सरेण सिद्धिं च लभते नात्र संशयः ।।७।।
अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत्।
तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः ।।८।।
।।इति श्रीनारदपुराणे संकटनाशनं गणेशस्तोत्रं सम्पूर्णम्।।



# आत्मबलं ज्ञातव्यम्

तेलुगु मूलम् - डा॥ वैष्णवाङ्घ्रि सेवकदासः
संस्कृतानुवादः - कु.यु. कृष्णवेणी

धनबलं जानन्ति सर्वे। धनमस्तिचेत् सर्वं सम्पादयितुं शक्ये इति लघुबालकोऽपि जानाति। एतदर्थं धनबलं प्राप्तुं, धनबलं उपयोगं कर्तुं धनबलमधिकृत्य इतोऽपि ज्ञातुं मानवः प्रयत्नं कुर्वन् अस्ति। धनं विद्यते चेत् विद्यार्थिन्यः विदेशेषु विद्यार्जनं कर्तुं शक्यते। यावत् कालं पठितुं वाञ्छा भवति तावत् पर्यन्तं पठितुं शक्यते। तत् नास्तिचेत् पठनं मध्ये एव स्थगनीयं भवति। धनं नास्ति चेत् ''यावत् इच्छा वर्तते तावत् पठितुं न शक्यते। किञ्चित् कष्टेन पूर्तिः भवति। अत्यन्त प्रयासं कृत्वा ये पठन्ति ते अपि सन्ति। धनस्य महत्वं जानन्ति, तदर्थमेव तस्य प्रभावमधिकृत्य अनुभवः विद्यते। तदर्थमेव प्रत्येकः अपि व्यक्तिः बहुजागरूकतया धनविषये व्यवहरति। धनबलगमनानन्तरं किमपि कर्तुं न शक्यते। किन्तु धनबलापेक्षया देहबलापेक्षया, बुद्धिबलापेक्षया अपि अधिक शक्तियुक्तः अन्यत् अस्ति। तदेव आत्मबलम्। एतदधिकृत्य प्रायास करणे कस्यापि ज्ञानमेव न भवति। प्रपञ्चे बहु अद्भुतान् साधयित्वा चिरस्थायिरूपेण स्वस्य नाम चरित्रे स्थापयन्ति। एतादृश महाजनाः ज्ञात्वा वा अज्ञात्वा वा आत्मबलस्य ज्ञानेन एव तत् कारणादेव भगवद्गीतोपदेशः आत्मबलमधिकृत्य कथनेन प्रारम्भः भवति।

भागवद्गीता आस्मान् अधिकृत्य कथयति। इत्युक्ते तत्वोपदेशं करोति इति न। त्वयि एव विद्यमान अपरबलमधिकृत्य ज्ञानं भवतु इति अपूर्ववरं तव दास्यति इत्यर्थः।

अस्मिन् शास्त्रे एका कथा अपि विद्यते। एकदा एकः ज्योतिष्कः एकस्य दरिद्रस्य गृहमागत्य तस्य दीनस्थितिं ज्ञात्वा तस्य कारणम् उक्तवान्।

वास्तविकतया तस्य वंशपरम्परया बहुधनमागतम् परन्तु तस्य पिता तत् धनमधिकृत्य अनुक्त्वा एव दिवं गतः। तत् कारणादेव सः दारिद्र्यबाधा अनुभवति इति ज्योतिष्कः उक्तवान्।

स ज्योतिष्कः एवं वदन् तत् सम्पत् अत्रैव विद्यते। परन्तु त्वम् दक्षिणस्यां दिशि गत्वा करोति चेत् मधुमक्षिकाः भ्रमराः त्वाम् दंशनं कृत्वा मारयन्ति। पश्चिमदिशि खननं करोति चेत् तत्रैव विद्यमान भूतम् तव कार्यस्य विघ्नं करोति। उत्तदिशि करोति चेत् तत्रैव बृहत् सर्पः त्वाम् तत्रै मारयति। परन्तु पूर्वस्यां दिशि खननं करोति चेत् तव हस्ते धनराशयः लभ्यन्ते इति उक्तवान्। अर्थात् धनं यत्र लभ्यते तत् जानाति चेत् स दरिद्रः निश्चयेन तन्मार्गगमने अवकाशः विद्यते। तादृशरूपेण श्रीमद् भगवद्गीता आत्मबलं कथं प्राप्तव्यमिति, आत्मबलमधिकृत्य विवरणं ज्ञापयति। सर्वे तत् तात्विक उपदेशरूपेण स्वीकृतवन्तः तत् कारणादेव

प्रत्येकस्य व्यक्तेः परमसम्पदः तेषां अप्राप्य एव गतः। सर्वे धनमस्तिचेदपि दरिद्ररूपेण एव स्थिताः।

''आत्मा शस्त्रादिभिः छेत्तुं न शक्यते। अग्निः दहनं कर्तुं न शक्नोति। जलम् आर्द्रं न करोति। वायुः शुष्कं न करोति''।

(भगवद्गीता २.२३)

''आत्मानं छेत्तुं दहितुं शुष्कयितुं आर्द्रयितुं न शक्यते। कदापि परिवर्तनमपि न भवति।'' एतदर्थमेव उक्तं सनातनः इति।

(भगवद्गीता २.२४)

अनेन प्रकारेण गीताचार्यः आत्मनः महत्वं ज्ञापितवान्। मानवः मरणं प्राप्नोति चेत्, सर्वे रोदनं कुर्वन्ति। आत्मा तत् शरीरादेव गतः इति सर्वे वदन्ति इत्युक्ते शरीरात् आत्मा निर्गच्छति चेत् रोदनम् आगमिष्यति। परन्तु शरीरे आत्मा भवति चेत् आनन्दं आगमिष्यति वा?न किमर्थमित्युक्ते तत् गमनानन्तरमेव तस्य महत्वं ज्ञायते। धननष्टं भविष्यति चेत् यथा धनमहिमा ज्ञायते तथैव आत्मविषयः।

वास्तविकतया अस्माकं कृते दृश्यमानं देहबलं मनोबलं बुद्धिबलं केवलम् अस्माकं वास्तविक शक्तिः १०% मात्रमेव। अवशिष्ट ९०% आत्मबलस्यैव भवति। तदेव मनुष्यस्य अनुपलब्धत्वात् अवशिष्टो भवति। आत्मबलं कथं ज्ञातव्यमिति इदानीम् अस्माकं प्रश्नः उदेति। मनसि विद्यमानसंशयान्, बुद्धौ विद्यमानपरिमितान् आलोचनादीन् त्यक्त्वा आत्मस्वरूपयुक्तो भूत्वा भवताम् आवश्यकं किमिति निश्चयं कृत्वा तत् साधयितुं - तीव्रप्रयासकरणमेव आत्मबलं जागृतं कर्तुं मार्गः। भूमौ बीजं वपनं कृत्वा तस्य सम्यक्तया सिञ्चति चेत् काश्चन दिवसानन्तरम् अङ्कुरः जायते।

भूमिः आत्मसदृशः। तत् चैतन्ये भवति। यदा तीव्रसंकल्पेन एकं लक्ष्यं स्थापयित्वा किमपि अवमानाधिकं न गणयित्वा अत्यवसरकार्याणि कुर्मः चेत् तदा आत्मबलं जागृतः भवति। वाञ्छितलक्ष्यं अवश्यं लभ्यते। एतादृश कार्यक्रमं लघु लघु लक्ष्यैः प्रारम्भं कृत्वा तत्र विजयः सिध्यते चेत् बृहत् बृहत् लक्ष्यान् साधयितुं शक्यते तदा आत्मबलं महोन्नतरूपेण जागृतं भविष्यति। गीता अस्माकं कृते अद्वितीयवरं प्रसादयिष्यति तदेव आत्मबलम्।






# वृद्धायाः चातुर्यम्

आसीत् चित्रपुरम् नाम किमपि नगरं श्रीपर्वतस्य समीपे। "पर्वतस्य शिखरप्रदेशे घण्टाकर्णः नाम राक्षसः प्रतिवसती" ति जनप्रवादः अवर्तत्।

अथैकदा कश्चन चोरः घण्टामेकां चोरयित्वा वनं गतः, व्याघ्रेण च हतः। तदा सा घण्टा वने एव अपतत्। अन्यस्मिन् दिने केचन वानराः तत्र आगच्छन्। कुतूहलेन तां घण्टां हस्ते धृत्वा अधुन्वन्। अकस्मादेव घण्टानादः अजायत्। घण्टानादेन चकिताः ते पुनः पुनः घण्टामधुन्वन्, घण्टाणादं च अकुर्वन्।

चित्रपुरस्थाः नागरिकाः वारं वारं पर्वतशिखरप्रदेशात् घण्टानादमाकर्णयन्। भयाकुलाः ते अचिन्तयन् " नुनं शिखरप्रदेशे घण्टकर्णः नाम राक्षसः वर्तते, यः मनुष्यां खादति, घण्टां च वादयति"। एवं च भीत्या पौरजनाः अन्यत्र गन्तुं प्रारभन्त।

तदा चिन्ताकुलः नृपः उदघोषयत् "यः घण्टकर्णं नाशयेत्, तस्मै विपुलं सुवर्णं यच्छेयम् अहम्" इति। तत् श्रुत्वा काचन वृद्धा वनं गता। तत्र च कंचित् कालं निभृतम् अतिष्ठत्। 'वानराः एव घण्टां वादयन्ति' इति सा अपश्यत्।

अन्येद्युः सा वानरेभ्यः मधुराणि फलाणि अयच्छत्। यावत् ते फलभक्षणमग्नाः संजाताः तावदेव तां घण्टामादाय प्रमुदिता सा नृपं प्रत्यागच्छत्, अवदच्च "राजन् घण्टाकर्णः हतः मया" इति। भुपः तस्यै प्रभूतं सुवर्णमयच्छत्। ततः प्रभृति पौरजनाः घण्टारवं न आकर्णयन्। भयमुक्ताः ते नगरं प्रतिन्यवर्तन्त्।





ॐ अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः॥





# आरोग्याय तिन्त्रिणी

तेलुगु मूलम् - डा. चिट्टिभोट्ल मधुसूदनशर्मा
संस्कृतानुवादः - डि.चैतन्यकृष्णः

भगवदत्तं षड्रसोपेतं भोजनं भक्षणेन केवलं शक्तिरेव न आयाति, अपि तु शरीरस्य मानसिकारोग्यमपि सुष्ठुतया भवति।

प्रतिनित्यम् आहारपदार्थानां निर्माणे, पाकगृहे उपलभ्यमाना तिन्त्रिणी आम्लरसोपेता इति विदितः विषयः एव। अस्याम् अत्यन्तौषधगुणान्, रोगनिवारकान् भगवान् निक्षिप्य सर्वेभ्यः जनेभ्यः प्रसादितवान्।

संस्कृते तिन्त्रिणी इति, आम्लीका इति च नामनी स्तः। आङ्गले टामरिण्ड् इति, हिन्दी भाषायां इमली इति व्यवहृतस्यास्य शास्त्रीयं नाम 'टामरिण्डस् इण्डिका' इति वर्तते। इयं सिसाल्पिपनेसि इति वृक्षकुटुम्बस्य सम्बद्धः वर्तते।

फ्लोरैड् परिमाणम् अधिकतया भूयमानत्वात् एतासामुपयोगेन नानाविधेभ्यः भयङ्कररोगेभ्यः रक्षणं प्राप्तुम् आहारसेवने अस्याः उपयोगं समीचीनमिति वैद्यनिपुणाः वदन्ति।

दैनन्दिनजीवने नानाविधरोगेभ्यः कथं रक्षणं प्राप्नुमः इति ज्ञास्यामः।

### पैत्यकण्डूयनेषु -

किञ्चित् तिन्त्रिणीं जले स्थाप्य कण्डूयनस्थाने स्थापयेत्।

वृश्चिक-मधुमक्षिका प्रभृति विषकीटानां दंशनस्थाने उपर्युक्त प्रकारेण कुर्यात्। तेन तत्स्थाने कण्डूयनं न्यूनं भवति।

### ग्रीष्मतापनिवारणार्थं -

प्रतिदिनम् एकवारं १०० मि.ली.जले १० ग्रा. तिन्त्रिणीं स्थाप्य एकघण्टात्परं सम्मिश्य निर्मितं रसं पथक् निष्कास्य तस्मिन् एलाचूर्णम्, एकचमसप्रमाणं गुडचूर्णं सम्मेल्य सेवनेन तापः दूरो भवति।

### विरेचनप्रभृतिषु वातरोगेषु -

२५ ग्रा. तिन्त्रिणीबीजचूर्णं, २५ ग्रा.जीरकानां शोषितचूर्णं, २५ग्रा. शर्कराचूर्णं सर्वानपि सम्मेल्य, स्थाप्य त्रिवारं दिने १-२ ग्रा. चर्णं ५०-१०० मि ली. जले सम्मेल्य सेवनेन वातरोगाः नश्यन्ति।




Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.

## आन्ध्र राष्ट्र नूतन गवर्नर् स्थाने श्री बिश्व भूषण हरिचन्द्रन् महोदयाः नियुक्ताः। प्रमाण स्वीकारस्य पूर्वदिने (२३-०७-२०१९) तिरुचानूरु श्रीपद्मावती देवि मातरं तिरुमल श्री वराहस्वामिनं तथा श्री वेङ्कटेश्वर स्वामिनं दर्शितवन्तः














ति.ति.देवस्थानस्य तिरुमल प्रत्येकाधिकारित्वेन नियुक्ताः
श्री ए.वि.धर्मरिड्डि महा भागाः १९-०७-२०१९
तिरुमल श्री स्वामिनः आलये श्री पि.बसंतकुमार ऐ.ए.एस., ति.ति.दे.
संयुक्तकार्यनिर्वहणाधिकारिणः महोदय (तिरुपति) प्रमाणस्वीकारं कारितवन्तः।



ति.ति.देवस्थानस्य श्री वेङ्कटेश्वर भक्ति चानल् माध्यमम् अध्यक्षः
तथा संचालकत्वेन श्री पृथ्वी राज् बालिरेड्डि महोदयाः
आन्ध्र राष्ट्र प्रभुत्वेन नियमिताः (२८.०७.२०१९) दिने देवस्थानाधिकरणः
तैः प्रमाण स्वीकारं अकारयण्।

